स च किल कृतनिश्चयो द्विजो भुजगपतिप्रतिदेशितात्मकृत्यः । यमनियमसहो वनान्तरं परिगणितोञ्छशिलाशनः प्रविष्टः ९

इति श्रीमहाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि उञ्छवृत्त्युपाख्याने पञ्चषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६५ ॥



उपसंहरति—**स चेति** । यमाः अहिंसादयः नियमाः शौचादयः वनान्तरं वनमध्यं प्रविष्टः 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्'परिगणितं परिमितमुञ्छशिलार्जितमन्नमश्नन् फणिपत्युक्तामुञ्छवृत्तेर्गतिं प्रापेति शेषः ॥ ९ ॥

वेदान्ते लक्ष्मणार्यं क्रतुविधिविवृतौ तीर्थनारायणार्यं
तर्के धीरेशमिश्रान् फणिपतिभणितौ पोलगंगाधरार्यम् ॥
वेदे सांगे पितृव्यं शिवमथ पितरं दक्षिणामूर्त्युपास्तौ
श्रौते चिन्तामणिं यः शरणमुपगतो भूम्नि गोपालदेवम् ॥ १ ॥
व्याकरोन्मोक्षधर्मान् स नीलकण्ठः समासतः । अनेन प्रीयतां देवो गिरिजापतिरव्ययः ॥ २ ॥

इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविन्दसूरिसूनोः श्रीनीलकण्ठस्य कृतौ भारतभावदीपे मोक्षधर्मपर्वार्थप्रकाशे- पञ्चषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६५ ॥

समाप्तेयं शान्तिपर्वटीका शुभमस्तु ॥ श्रीकृष्णार्पणमस्तु ॥

अस्यानन्तरमनुशासनपर्व भविष्यति—
तस्यायमाद्यः श्लोकः ।
युधिष्ठिर उवाच ।
शमो बहुविधाकारः सूक्ष्म उक्तः पितामह । न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् ॥ १




अयं ग्रन्थः श्रीकिञ्जवडेकरकुलकमलदिवाकरसोमयाजिदत्तात्रेयदीक्षिततनुज-पण्डितरामचन्द्रशास्त्रिणा परिशोधितष्टिप्पण्यादिना परिष्कृतश्च ॥ भारती जयतु ॥ शाके १८५४ ॥